W 707 ) रणरणअ-सुण्ण-हिअओ चिंतंतो विरह-दुब्बलं जाअं ।
अगणिअ-णिअ-वसइ च्चिअ वोलीणो गाम-मज्झेण ॥ ५१ ॥

W 124 ) कइअव-रहिअं पेम्मं णत्थि च्चिअ मामि माणुसे लोए ।
जइ होइ कस्स विरहो होंतइ[1] विरहम्मि को जिअइ ॥ ५२ ॥

W 85 ) दक्खिण्णएण एंतो सुहअ सुहावेसि अम्ह गेहाइं ।
णिक्कइअवेण जाणं गओ सि का णिव्वुई ताणं ॥ ५३ ॥

---

क्षितवाच्यध्वनि,[2] अनेन तद्दर्शनस्य प्रतीते ॥५०॥ ५१) काचित् सहचरमाह । **रणरणअ**— 'रणरणकशून्यहृदयश्चिन्तयन् विरहदुर्बलां जायाम् । अगणितनिजवसतिरेवापक्रान्तो ग्राममध्येन ॥' एषा देशान्तरादागम्य ग्राममासाद्य विरहदुर्बला जाया कीदृशीमवस्थां प्राप्तेति चिन्तारणरणकशून्यहृदयो ऽस्या वीथ्यामात्मीयमगारमिति विस्मरन् मोहाद् ग्राममध्येन निर्यात इत्यनेन मन्ये अनुरागातिशयेनायमेतादृशावस्थां प्राप्त पश्येति, कश्चित् सहचरमाहेत्यभिप्राय । अत्र वाच्यगतासंलक्ष्यक्रमो रसध्वनि, प्रवासविप्रलम्भस्य प्रतीते ॥५१॥ ५२) नायिका सखीमाह । **कइअव**— 'कैतवविरहितं प्रेम नास्त्येव सखि मानुषे लोके । यदि भवति कस्य विरहो भवति च विरहे को जीवति ॥' अत्र काचित् स्वाधीनपतिका पत्यौ निरतिशयप्रेमानुबद्धा विरहे क्षणमपि न शक्य जीवितुमिति मन्वाना तस्मिन् प्रोषिते प्राणान् धारयन्ती सख्या पुरस्तात्, 'हे सखि, मानुषे लोके निष्कैतवं प्रेम नास्त्येव । यद्यस्ति कस्य विरह । यथाकथंचित् विरहे सति केन वा जीव्यत इत्यनेन मया विरहे सत्यपि, जीवितमपि धार्यते । मम प्रेम सकैतवम्', इत्यात्मानमुपालभत इत्यभिप्राय । हेतुरलङ्कार । निष्कैतवप्रेम्णो विरहाभावनिमित्तत्वात् । अत्र वाक्यप्रकाश्यो ऽसंलक्ष्यक्रमो भावध्वनि, निर्वेदस्य प्रतीते ॥ ॥ ५२ ॥ ५३) नायिका नायकमाह । **दक्खिण्णएण**— 'दाक्षिण्येनायन् सुभग सुखयस्यस्माकं गृहाणि । निष्कैतवेन यासां गतो ऽसि का निर्वृतिस्तासाम् ॥' अत्र काचित् प्रगल्भा धीरा नायिका यथाकथंचित् गृहमागतं नायकं प्रति, हे सुभग, दाक्षिण्येनास्मानेव सुखयसि ।[3] सहजप्रेम्णा यासां गृहाणि गच्छसि तासां कीदृक् सुखमित्यनेन, तत्र यत्राभिरतिस्तत्रैव स्थातव्यम् । किमर्थमस्मान् खेदयितुमागच्छसि इति तमाक्षिपतीत्यभिप्राय । अत्र वाक्यप्रतिवाक्यात्यन्ततिरस्कृताविवक्षितवाच्यो ध्वनि, अनेन तद्दर्शनस्य प्रतीते ॥ ५३ ॥

---

1 भा T होस्सइ । 2 भा T वाच्य । 3 T अस्माकं सुखयसि ।

W 554 ) एद्दहमेत्तग्गामे ण पडइ भिक्स त्ति कीस मं भणसि ।
धम्मिअ करंज भंजअ जं जीअसि तं पि दे वहुअं ॥ ५४ ॥

W 173 ) सिहि-पेहुणावअंसा वहुआ वाहस्स गव्विरी भमइ ।
गअ-मोत्तिअ गहिअ-पसाहणाण मज्झे सवत्तीणं ॥ ५५ ॥

W 938 ) पच्चक्ख-मंतु-कारअ जइ चुंवसि मह इमे हअ-कवोले ।
ता मज्झ पिअ-सहीए विसेसओ कीस तण्णाओ ॥ ५६ ॥

---

५४) काचिदसती देवलकमुपालभते । एद्दह– 'एतावन्मात्रे ग्रामे न पतति भिक्षेति कस्मान् मा भणसि । धार्मिक करञ्जभञ्जक यज्जीवसि तदपि ते बहु ॥' अत्र काचित् कुलटा महत्यपि ग्रामे काचिदपि भिक्षा न ददातीति खिद्यमान देवल प्रति विपरीतलक्षणया तमपकारिण धार्मिकेति सबोध्यास्मिन् ग्राम इत्यादिना सर्वासामस्माक सकेतभूतकरञ्जभञ्जनापराधेन दण्ड्यस्य कुतो भिक्षेति त भर्त्सितवतीत्यभिप्राय । अत्र[1] पदप्रकाश्यस्वत सिद्धार्थशक्तिमूलो ऽसकीर्णो वस्तुना वस्तुध्वनि , धार्मिकपदप्रकाश्यव्यङ्ग्यस्यानुगृहीतत्वात् ॥ ५४ ॥ ५५) काचित् सहचरीमाह । सिहि– 'शिखिबर्हावतसा वधूर्व्याधस्य गर्विता भ्रमति । गजमौक्तिकगृहीतप्रसाधनाना मध्ये सपत्नीनाम् ॥' पेहुण इति वर्हवाची देश्य , "झाड" आदिषु पठित । अत्र व्याधस्य वधूर्गजमौक्तिकगृहीतमण्डनाना सपत्नीना मध्ये बर्हावतसगर्विता भ्रमतीत्यनेन, पतिर्मय्यासक्ततया निरन्तरसुरतखिन्नो मौक्तिकार्थं गजान् व्यापादयितुमसमर्थ सन् मम बर्हमेवावतसीकृतवान् । युष्मास्वनुरागाभावादखिन्नतया गजान् व्यापाद्य मौक्तिकानि युष्मभ्य दत्तवानिति स्वसौभाग्येन गर्विता भ्रमति पश्येति सहचरीमाहेत्यभिप्राय । अत्र गुणीभूतव्यङ्ग्ययो ससृष्टि । वर्हावतसगजमौक्तिकप्रसाधनपदव्यङ्ग्ययोर्वाच्य[2]सिद्ध्यङ्गयो ससर्गात् ॥ ५५ ॥ ५६) नायिका नायकमुपालभते । पच्चक्ख– 'प्रत्यक्षमन्तुकारक यदि चुम्बसि मम इमौ हतकपोलौ । तस्मान्मम प्रियसख्या विशेषक कस्मादार्द्र ॥' तण्णाअ–शब्द आर्द्रवाची । "ववृत्त" आदिषु पठित । अत्र काचिन्नायिका स्वकपोलप्रतिबिम्बित सखीमुख चुम्बन्त नायक प्रति, हे प्रत्यक्षापराधकारक, यत्राभिरतिस्तत्रैव स्यातव्यम् । किमस्मान् खेदयितुमागच्छसीति तामाक्षिपतीत्यभिप्राय । अपराधकारक इति इमौ कपोलौ चुम्बसि

---

1 M प्रकाश्यव्यङ्ग्यकरञ्जभञ्जनपदप्रकाश्यव्यङ्ग्य० । 2 T वाच्यसिद्ध्यङ्गयो ससर्गात् ।

W 237) पइ पुरओ चिअ णिज्जइ विंचुअ[1]-दट्ठेत्ति जार-वेज्ज घरं ।
सहिअअ-सहिअण-पसरिअ-कर-जुअलंदोलिरी अज्ज ॥५९॥

W 440) सेउल्लिअ-सव्वंगी णामग्गहणेण तस्स सुहअस्स ।
दूइं अप्पाहेंती[2] तस्स चिअ घरंगणं पत्ता ॥ ६० ॥

W 688) मा वच्चसु वीसंभं इमाण बहु-चाडु-कम्म-णिउणाण ।
णिव्वत्तिअ-कज्ज-परम्मुहाण सुणआण व खलाण ॥ ६१ ॥

---

रितव्यमिति निषेधस्य प्रतीतेः ॥ ५८ ॥ ५९ ) काचित् सहचरीमाह । **पइ**– 'पतिपुरत एव नीयते वृश्चिकदष्टेति जारवैद्यगृहम् । सहृदयसखीजनप्रसारितकरयुगलान्दोलिनी अद्य ॥' अत्र काचिदसच्चरिता उपपतिनानुरागपरीक्षार्थं पतिसमक्षमेव त्वया मद्गृहमागन्तव्यमिति नियोजिता सती वृश्चिकदष्टास्मीति सखीभिरुह्यमाना पत्युः पश्यत एव जारवैद्यगृहं नीयत इत्यनेन अस्या वञ्चनाचातुरीं पश्येति काचित्सहचरीमाहेत्यभिप्रायः । अत्र स्वतःसिद्धार्थशक्तिमूलो ऽलङ्कारेण वस्तुध्वनिः, युक्त्या वञ्चनचातुर्यस्य प्रतीतेः ॥ ५९ ॥ ६०) कश्चित्सहचरमाह । **सेओल्लिअ**– 'स्वेदार्द्रीकृतसर्वाङ्गी नामग्रहणेन तस्य सुभगस्य । दूतीं संदिशन्ती तस्यैव गृहाङ्गणं प्राप्ता ॥' **अप्पाहंती**–इति "संदिशो ऽप्पाहः" इति **अप्पाह**– आदेशः । अत्र काचित् प्रियमानेतुं दूतीं संदिश्य तन्नामधेयग्रहणात् स्वेदार्द्रिताङ्गी तस्याः प्रस्थितायाः तामनुसृत्य पुनः पुनः संदेशशेषं[3] कथयन्ती रसातिशयादविदितसंचारितपदा तस्य गृहाङ्गणं प्राप्तेत्यनेनानुरागं पश्येति कश्चिदाहेत्यभिप्रायः । अत्र वाक्यप्रकाश्यो ऽसंलक्ष्यक्रमो भावध्वनिः, औत्सुक्यस्य प्रतीतेः ॥ ६० ॥ ६१) वेश्या दुहितरमाह । **मा वच्चसु**– 'मा व्रज विस्रम्भमेषां[4] बहुचाटुकर्मनिपुणानाम् । निर्वर्तितकार्यपराङ्मुखानां शुनकानामिव खलानाम्॥' वच्चसु इत्यत्र "वर्ततिमदिव्रजाम्" इति व्रजेरित्यस्य वकारादेशः । अत्र काचिद्वेश्यामाता दुहितरं प्रति, त्वत्संभोगलोलुपतया प्रथमं बहुचाटुकर्मनिपुणानां संभोगे निर्वृत्ते सति शुनकानां [इव] पराङ्मुखानां विश्वासं मा व्रजेत्यनेन पूर्वमेव त्वया तेभ्यो धनं ग्रहीतव्यम् । पश्चान्न ददतीति कथितवतीत्यभिप्रायः । अत्रोपमालङ्कारः । स्वतःसिद्धार्थशक्तिमूलो वस्तुना वस्तुध्वनिः,

---

1 विंचिअ । 2 M T अप्पाहती । 3 M संदेहशेषं । 4 M T विसम्भमेषां ।

W 743 ) भिउडीएँ पुलोइस्सं णिब्भच्छिस्सं परम्मुही होस्सं ।
जं भणह तं करिस्सं सहीओ जइ तं ण पेक्खिस्सं ॥ ६२ ॥

W 532 ) ओसरइ धुणइ साहं भंभा-मुहलो पुणो समुल्लिहइ ।
जंबू-फलं ण गेण्हइ[1] भमरो त्ति कई पुढम-डक्को[2] ॥ ६३ ॥

W 499 ) कत्तो खेमं कत्तो जो सो खुज्जंबओ घरद्दारे ।
तस्स किर मत्थओवरि को वि अणत्थो समुप्पण्णो ॥ ६४ ॥

---

अनेन प्रथममेव धन ग्रहीतव्यमिति वस्तुन प्रतीते ॥ ६१ ॥ ६२) नायिका सखीमाह । **भिउडीए–** " भृकुट्या विलोकयिष्यामि निर्भर्त्सयिष्यामि पराङ्मुखी भविष्यामि । यद्भणत तत्करिष्यामि हे सख्यो दयित [यदि तं] न द्रक्ष्यामि ।।" अत्र काचिन्मुग्धा नायिका सखीभिर्मानकरणाय बोधिता ता प्रति, हे सख्य , अपराधिन प्रियमुद्दिश्य भवद्भि [ भवतीभि ] रुपदिष्ट भृकुटीविलोकनादिक करिष्यामि, यदि त न द्रक्ष्यामि, इत्यनेन तस्मिन्नदृष्टे अहमात्मन प्रभवामि । दृष्टे पुनस्तत्परवशा न प्रभवामीति स्वानुरागं प्रकटितवतीत्यभिप्राय । अत्र वाक्यप्रकाश्यो ऽसलक्ष्यक्रमो भावध्वनि , अनुरागातिशयस्य प्रतीते ॥ ६२ ॥ ६३) काचित् सहचरीमाह । **ओसरइ–** ' अपसरति धुनोति शाखा भम्भामुखर पुन समाश्रयति । जम्बूफल न गृह्णाति भ्रमर इति कपि प्रथम दष्ट ॥ ' भम्भेत्यनुकरणम् । " क शक्तमुक्तदष्टमृदुलरुग्णेषु " इति दष्टशब्दे सयुक्तस्य कादेश । " दम्भ - दर " इत्यादिना दस्य डादेश । अत्र काचित् प्रातिवेशिकी सहचरी प्रति कपिचेष्टितकथनव्याजेन एष पूर्वं परदारसगतस्तत्पतिना ताडित । तथाप्यनुरागातिशयादिदानीमपि तद्गृह प्रवेष्टुकामस्तत्र तामेव दृष्ट्वा अन्यशङ्कया उपसर्तुमक्षम सन्नपसरति । तदेतज्ज्ञापनार्थं यत्किंचिच्चापल्यति । कासादिशब्दकरे, अय त इति भर्त्सनवचनाभावाच्चोपसरति,सहसा न प्रविशति, पश्येत्यभिप्राय । अत्र स्वत सिद्धार्थशक्तिमूलो वस्तुना वस्तुध्वनि , कपिचेष्टितकथनेन तच्चेष्टितस्य प्रतीते ॥ ६३ ॥ ६४) प्रोषितभर्तृकाया वचनम् । **कत्तो खेमं–**'कुत क्षेम कुत यत स कुब्जाम्रो गृहद्वारे । तस्य किल मस्तकोपरि कोऽप्यनर्थ समुत्पन्न ॥' अत्र काचित् प्रोषितभर्तृका कयाचित् कुशल पृष्टा ता प्रति मम क्षेम कुत कुत । निर्वेदातिशयाद् द्विरुक्ति । मम गृहाङ्गणे यो ऽसो कुब्जाम्रस्तस्य शिरसि कोऽप्यनर्थ इति मञ्जरीमेना दृष्ट्वा कथ जीवामीत्यभिप्राय । अत्र गूढ नाम गुणीभूतव्यङ्ग्ये प्रतीयमानस्य वाच्यायमानत्वात् ॥ ६४ ॥

---

1 M T गण्हइ । 2 M T दक्को ।

W 379 ) भंडंतीएँ तिणाइं सिविउं दिण्णाइ जाइ पहिअस्स ।
ताइ चेअ पहाए असई आअड्ढइ रुअंती ॥ ६५ ॥

W 881 ) अइपिहुलं जल कुंभं घेत्तूण समागअ म्हि सहि तुरिअं ।
सम-सेअ-सलिल-णीसास-णीसहा वीसमामि खणं ॥ ६६ ॥

W 955 ) केसा पंडुर-छाआ असई-संगेण चम्म जज्जरिअं ।
चित्तं तुह सोभग्गं गोदा दूइत्तणं कुणइ ॥ ६७ ॥

---

६५) काचित् प्रातिवेशिकी सखीमाह । भंडंतीए- ' भर्त्सयन्त्या तृणानि स्वपितु दत्तानि यानि पथिकस्य । तान्येव प्रभाते असती आकर्षति रुदती ॥ ' अत्र काचित् प्रातिवेशिकी ययानया कुलटया रात्रावागतेन पथिकेन शयनार्थं तृणानि याचितया त विलोक्य साभिलाषया गृहजनवञ्चनार्थं त वृथा भर्त्सयन्त्या यानि तृणानि दत्तानि सैव प्रभाते तान्येव तृणानि रुदत्याकर्षतीत्यनेनेषु तृणेष्वह तेन सह विविधानि सुरतान्यनुभूय एतादृशानि कथ त्यजेयमिति रुदती कर्षति, पश्येति सखीमाहेत्यभिप्राय । अत्रासलक्ष्यक्रम मसृष्टो भावध्वनि, भर्त्स-यन्तीति, रुदती कर्षतीति च पदप्रकाशयोरवहित्थाविषादयो ससृष्टत्वात ॥ ६५ ॥ ६६) कस्याश्चिद् असत्या वचनम् । अइ पिहुलं- 'अतिपृथुल जलकुम्भ गृहीत्वा समागतास्मि सखि त्वरितम् । श्रमस्वेदसलिलनि श्वासनि सहा निश्रमामि क्षणम् ॥' अत्र काचित् जलाहरणाय नदीं गत्वा तत्र केनचिदुपपति-नानुभूतसभोगजनितश्रमस्वेदादियुक्ता गृहमागम्य कयाचित् प्रतिवेशिन्या जलानयनार्थमाहूयमाना ता प्रति, अतिपृथुलमित्यादिना सभोगजनित स्वकीय श्रमादिकमन्यथादाक्षिण्य श्रमादिभ्यो जलकुम्भाहरणकृत, न चार्यरतकृतमिति निवेदयतीत्यभिप्राय । अत्र स्वत सिद्धार्थशक्तिमूले ऽलकारेण वस्तुध्वनि, हेतुना चार्यरतप्रच्छादनस्य प्रतीते ॥ ६६ ॥ ६७) कस्याश्चिदसत्या जरत्या वचनम् । केसा पंडुर- 'केशा पाण्डुरच्छाया असतीसगेन चर्म जर्जरितम् । चित्र तव सौभाग्य गोदा दूतीत्व करोति ॥ ' अत्र केनचिदुपपतिना प्रकाश पुष्पाणि दातुम क्षमेण गोदावरीपूर्णाङ्ग गत्वा पत्रपुटे निक्षिप्य वा प्रवाहे त्यक्तानि गोदावर्या समा-नीतानि पुष्पाणि गृह्णन्तीं काचिदसतीं प्रति, काचिज्जरती अहमेवविधा यत्र कुत्रापि न दृष्टमीदृश तव सौभाग्यम् । चित्र गोदा दूत्य करोतीति अनेन मया ज्ञात त्वचरितमिति ता निवेदितवतीत्यभिप्राय । अत्र कविप्रौढोक्तिसिद्धार्थशक्तिमूले

W 956 ) णीणिद्दं दोब्बल्लं चिंता अलसत्तणं सणीससिअं ।
मह मंद-भाइणीए कए सहि तुमं पि अहह परिभवइ ॥ ६८ ॥

W 476 ) उज्जुअ-रए ण तूसइ वंकम्मि वि आसअं विअप्पेइ ।
एत्थ अभव्वाएँ मए पिए पिअं कह णु कादव्वं ॥ ६९ ॥

W 225 ) अद्धच्छि-पेच्छिअं मा करेसु साहाविअं पलोएसु ।
सो वि सुदिट्ठो क्खु भवे तुमं पि मुद्धा कलिज्जिहिसि ॥ ७० ॥

W 452 ) कह सा सोभग्ग-गुणं मए समं वहइ सग्घिण तुमाए ।
जाए हरिज्जइ णामं हरिऊण वि दिज्जए मज्झ ॥ ७१ ॥

---

वस्तुना वस्तुध्वनि अनेन तद्दृष्टतच्चरितस्य प्रतीते ॥ ६७ ॥ ६८) नायिका दूतीमुपालभते । **णीणिद्दं**–'निर्निद्र दौर्बल्य चिन्ता अलसत्व सनिःश्वसितम् । मम मन्दभागिन्या कृते सखि त्वामपि अहह परिभवति ॥' अत्र काचिन्नायिका सखीं प्रति, हे सखि, मन्दभागिन्या मम कृते प्रियमानेतु गतागतानि कुर्वती त्वा निर्निद्र-त्यादिना एते भावा [ [1]परिभवन्तीत्यनेन इति तामुपालभत इत्यभिप्राय ] अत्र स्वत सिद्धार्थशक्तिमूलो वस्तुना वस्तुध्वनि, मन्दभागिन्या इति पदस्याधन दूत्यास्तत्रासक्तिप्रतीते ॥ ६८ ॥ ६९ ) नायिकोक्ति । **उज्जुअ**– ऋजुरते न तुष्यति वक्रे ऽप्याशय विकल्पयति । अत्राभव्यया मया प्रिये प्रिय कथ नु कर्तव्यम् ॥ ' अत्र काचिन्नायिका सखीभिस्तव प्रेयानन्यत्रासक्तस्त्वया किमिति नावर्ज्यत इति पृष्टा ता प्रति, ऋजुरत-इत्यादिना वाक्यकदम्बकेन त कथमावर्जयामीति स्वविषाद प्रकटितवतीत्यभिप्राय । अत्र वाक्यप्रकाश्यो ऽसलक्ष्यक्रमो भावध्वनि, विषादस्य प्रतीते ॥६९॥ ७०) काचिदसज्जरती प्रथमकुलटा बोधयति। **अद्धच्छि**– ' अर्धाक्षिप्रेक्षित मा कुरुष्व स्वाभाविकमवलोकय । सो ऽपि सुदृष्ट खलु भवेत् त्वमपि मुग्धा करिष्यसे ॥' अत्र कचिदपि सुरूप युवान इतरजनभयादर्धविलोकनेन साभिलाष पश्यन्ती नवकुलटा प्रति, काचिदसज्जरती शङ्कास्पदमर्धविलोकन न कर्तव्यम् । स्वाभाविकमेव विलोकयेति तत्र फल दर्शयित्वा तामेव कुर्वतीत्यभिप्राय । अत्र गूढक नाम गुणीभूतव्यङ्ग्य, प्रतीयमानस्योपदेशस्य व्याख्यायमानत्वात् ॥७०॥ ७१ ) काचित् कृतगोत्रस्खलित नायकमुपालभते । **कह सा**–'कथ सा सौभाग्यगुण मया सम वहति सघृण त्वया। यस्या हृदये ते नाम हृत्वा अपि दीयते मह्यम् ॥' **सग्घिण** इत्यत्र "से ग" [ग से] इति समासे विकल्पेन द्वित्वम्। अत्र

1 Added from Weber's extract,

W 482 ) उज्जागरअ-कसाइअ-गरुअच्छी मोह-मंडण-विलक्खा ।
लज्जइ लज्जालुइणी सा सुहअ सहीण वि वराई ॥ ७२ ॥

W 193 ) गोला-विसमोआर-च्छलेण अप्पा उरम्मि से मुक्को ।
अणुअपा णिद्दोसं तेण वि सा गाढमुवगूढा ॥ ७३ ॥

W 741 ) जइ वि हु दिर्ल्लिदिलिआ तह वि अ मा पुत्ति णग्गिआ भमसु ।
छेआ गाम-जुआणो माअं धूआएँ अणुमंति ॥ ७४ ॥

---

काचिन्नायिका अन्यकान्तासक्तेन नायकेन तन्नामग्रहमाकारिता स प्रति, हे सघृण मयि दयापर, त्वया यस्या नाम कृत्वा मह्य प्रति दीयते सा कथ मत्सदृशीति वक्रोक्त्या निर्घृण, तामेव सदा हृदये वहसि । पुर स्थितामपि मा न जानासि । त्वा धिगिति तमुपालभत इत्यभिप्राय । अत्र स्वत सिद्धार्थशक्तिमूले ऽमर्षिणी वस्तुना वस्तुध्वनि, सघृणपदप्रकाश्येन तदुपालम्भस्यानुगृहीतत्वात् ॥ ७१ ॥ ७२) दूती नायकमाह । **उज्जागर**– 'उज्जागरकषायितगुर्वक्षी मोघमण्डनविलक्षा । लज्जते लज्जावती सा सुभग सखीनामपि वराकी ।' अत्र प्रथम वासकसज्जिकाया प्रिये चिरायति, पश्चाद्विरहोत्कण्ठिताया नायिकाया दूती नायक प्रति, त्वया वञ्चिता समदु खस्य सखीजनस्यापि सकाशाल्लज्जत इत्यनेन तत्कृतादपि नयान् महत पराभवादित पर का दशा प्राप्नुयात् । तद् त्वया सत्वरमागत्य समाश्वासनीयेति स प्रोत्साहितप्रतीय-भिप्राय । अत्र स्वत सिद्धार्थशक्तिमूलवस्तुना वस्तुध्वनि, अनेन नायिकाया अनर्थागमरूपस्य वस्तुन प्रतीते ॥ ७२ ॥ ७३ ) काचिद् विदग्धा सखीमाह । **गोला विसम**– 'गोदाविषमावतारच्छलेनात्मा उरस्यसि [उरस्यस्य] मुक्त । *अनुकम्पानिर्दोष केनापि सा गाढमुपगूढा ॥'* अत्रया कामुकी त निरीक्ष्यानु रागातिशयाद् विषमावतारस्खलनव्याजेन तस्मिन्निपतति । एषोऽप्यनुकम्पया गूढ-मिव तामालिङ्गतीत्यनेनेता युवानौ सर्वेषा पश्यतामेव परस्परमालिङ्गनमाचरत । अनयो कपटचरित पश्येति काचित् कामप्याहेत्यभिप्राय । अत्र स्वत सिद्धार्थ-शक्तिमूले ऽलकारेण वस्तुनालकारध्वनि, अन्योन्यालकारेण सर्वजनवञ्चनारूपस्य वस्तुन प्रतीयमानत्वात् ॥ ७३ ॥ ७४) काचिदसती यून श्रावयति । **जइ वि-** 'यद्यपि खलु बाला तथापि च मा पुत्रि नग्निका भ्रम । छेका ग्रामयुवानो मातर दुहितुरनुमान्ति ॥' अत्र काचिदसती स्वदुहितर प्रति, यद्यपि त्व बाला तथापि विवसना मा भ्रम । विदग्धा ग्रामयुवानो दुहित्रा मातरमनुमान्तीति दुहितुर्यं मदन–

W 333 ) मुह-विज्झविअ-पईवं णिरुद्ध-सासं[1] ससंकिउल्लावं ।
सवह-सअ-रक्खिओट्ठं चोरिअ-रमिअं सुहावेइ ॥ ७५ ॥

W 879 ) पंथअ ण एत्थ संथरमत्थि मणं पत्थरत्थले गामे ।
उण्णअ-पओहरे पेक्खिऊण जइ वससि ता वससु ॥ ७६ ॥

W 884 ) वंक भणिआइ कत्तो कत्तो अद्धच्छि-पेच्छिअव्वाइं ।
ऊससिउं पि ण तीरइ छइल्ल[2]-बहुले हअग्गामे ॥ ७७ ॥

---

मन्दिर तथैव मातुरपीति निश्चिन्वन्तीत्यनेन वा दूतीभूत्या स्वकीयस्य मदनमन्दिरस्य मनोहरतां व्यञ्जयन्ती तान् प्रोत्साहयतीत्यभिप्राय । अत्र स्वत सिद्धार्थशक्तिमूलो ऽलङ्कारेण वस्तुध्वनि , अनुमानालङ्कारेण तत्प्रोत्साहनरूपस्य वस्तुन प्रतीते ॥ ७४ ॥ ७५ ) काचिदसतीमाह । **मुहविज्झविअ** 'मुखनिर्वापितप्रदीप निरुद्धनि श्वासशङ्कितोल्लासम् । सशपथशतरक्षितोष्ठ चोरितरत सुखयति॥' अत्र काचिदसती केनचित् प्रेषिता चोरितवर्णनेन त्वयापि तत्र प्रवर्तितव्यमिति सखी प्रोत्साहयतीत्यभिप्राय । अत्र स्वत सिद्धार्थशक्तिमूलो वस्तुना वस्तुध्वनि । अनेन तत्प्रोत्साहनस्य प्रतीते ॥ ७५ ॥ ७६) काचिदसती *गृहमागत पथिकमाह* । **पंथअ ण**— ' पान्थ नात्र स्रस्तरमस्ति मनाक् प्रस्तरस्थले ग्रामे । उन्नतपयोधरान् दृष्ट्वा यदि वससि तस्माद् वस ॥' उन्नतपयोधरान् उन्नतमेघान् उन्नतस्तनौ च । अत्र काचिद-सच्चरिता विदग्धा हालिकवधू सायतनसमये गृहमागत्य शयनार्थं स्रस्तर याचमान कमप्यभिरूपपथिक युवान प्रति, साभिलाषापि निरभिलाषेव गृहजनवञ्चनार्थं प्रस्तरस्थले ग्रामे मनागपि स्रस्तर नास्तीति प्रतिकूल ब्रुवाणा उन्नतपयोधरौ दृष्ट्वा यदि वससि तस्माद् वसेत्यनेनोन्नतस्तनमण्डल दृष्ट्वा यद्युपभोगापेक्षास्ति तर्हि तिष्ठेति निवासाय त प्रोत्साहयतीत्यभिप्राय । अत्र शब्दशक्तिमूलो वस्तुध्वनि , अनेन तत्प्रोत्साहनस्य गम्यमानत्वात् । स्तनमण्डल दृष्ट्वा रिरंसुश्चेत्तिष्ठ इति वस्तुन प्रतीते ॥ ७६ ॥ ७७) कस्याश्चिन्निर्वेदोक्ति. । **वंकभणिआइ**— ' वक्रभणितानि कुत कुत अर्धाक्षिप्रेक्षितानि । उच्छ्वसितुमपि न शक्यते छेकबहुले हतग्रामे ॥' अत्र काचिदसती स्वैरभणितविलोकनचातुर्येण त्वया विमाकृष्यन्ते युवान इति पृष्टा ता प्रति, विदग्धबहुले इङ्गिताकारवेदिजनप्रचुरे ऽस्मिन् ग्रामे उच्छ्वसितुमपि न पार्यते । कुतो वक्रभणितानीत्यनेन स्वैरविहारसुखाभावादुद्भूत स्वनिर्वेद प्रकटित वतीत्यभिप्राय । अत्र वाक्यप्रकाश्योऽसंलक्ष्यक्रमो भावध्वनि , निर्वेदस्य प्रतीते ॥७७॥

---

1 M T णिरुद्धणीसा । 2 M T छइल्ल ।

W 885 ) तत्थ वि होंति सहीओ पुत्तिऍ मा रुवसु जत्थ दिण्णा सि ।
तत्थ वि णिउंज-लीला तत्थ वि गिरि वाहिणी गोला ॥ ७८ ॥

W 132 ) रूवं अच्छीसु ठिअं फंसो अंगेसु जंपिअं कण्णे ।
हिअअं हिअएण समं विओइअं कि थ देव्वेण ॥ ७९ ॥

W 400 ) भण को ण रूसइ जणो पत्थिज्जंतो अदेस-कालम्मि ।
रइ-वावुडा रुअंतं पिअं पि पुत्तं सवइ माआ ॥ ८० ॥

W 742 ) गअ गंड-गवअ-सेरिह-सरभअ-सद्दूल-रिक्ख-जाईणं ।
थणआ वाह-वहूए अभअं दाउं व णिक्कंता ॥ ८१ ॥

---

७८) काचिद् बालिकामाह । **तत्थ वि**-'तत्रापि भवन्ति सख्य पुत्रिके मा रुदिहि यत्र दत्तासि । तत्रापि निकुञ्जलीलास्तत्रापि गिरिवाहिनी गोदा ॥' अत्र काचिद् विदग्धा सखी सखीभि सम गोदावरीतीरनिकुञ्जेषु स्वैरविहारलीला स्मृत्वा श्वशुरग्रामगमनमनिच्छन्तीं बालां प्रति, त्व यत्र दत्तासि तत्र सख्यादय सन्ति, मा रुदिहीत्यनेन तत्रापि तव स्वैरसुख सपत्स्यते, गच्छेति प्रोत्साहितवतीत्यभिप्राय । अत्र स्वत सिद्धार्थशक्तिमूलो वस्तुना वस्तुध्वनि, अनेनाश्वासनेन तत्रापि चौर्यरतक्रीडा सभविष्यन्तीति वस्तुन प्रतीते ॥ ७८ ॥ ७९) नायिकावाक्यम् । **रूवं अच्छीसु**- 'रूपमक्ष्णो स्थित स्पर्शोऽङ्गेषु जल्पित कर्णे । हृदय हृदयेन सम (सह स्थित) वियोजित निमत्र दैवेन ॥' **कि थ** इत्यत्र "लुगव्ययस्यदाद्या तदच" इत्यदाद्यात्परस्याव्ययस्यादेरचो लुक् । अत्र काचित् प्रोषितभर्तृका विरहव्यथातिशयादस्वास्थ्य प्राप्ता निरन्तरचिन्तासमानीतदयितरूपादिकमुपालभमाना दैवेन किमत्र वियोजित सर्वमुपस्थितमित्यनेन कथ मम हृदयमङ्गानि तप्यन्त इति सविस्मय सखीमाहेत्यभिप्राय । अत्र वाक्यप्रकाश्योऽसलक्ष्यक्रमो रसध्वनि, स्मरणाकारिण प्रवासविप्रलम्भस्य प्रतीते ॥ ७९ ॥ ८०) दूती जारमाह । **भण को**- 'भण को न रुष्यति जन प्रार्थ्यमान अदेशकाले । रतिव्यापृता रुदन्त प्रियमपि पुत्र शपति माता ॥' अत्र काचिदसतीमनवसरे रतिं प्रार्थ्य तन्निरासाद्विमनायमानमुपपतिं प्रति, दूती, अनवसरे याचमानाय को वा न रुष्यति । तथाहि । माता रतिकाले प्रियमपि पुत्र रुदन्त शपतीत्यनेन त्वत्कृत एवाय दोष, न तन्निमित्तक इति त प्रोत्साहयतीत्यभिप्राय । अत्र स्वत सिद्धार्थशक्तिमूलोऽलङ्कारेण वस्तुध्वनि, निदर्शनालङ्कारेण रतिप्रार्थनाभङ्गनिमित्तकतारप्रोत्साहनस्य गम्यमानत्वात् ॥ ८० ॥ ८१) काचित सखीमाह । **गअगंड**- 'गजगण्डगवयसैरिभशरभशार्दूलऋक्ष

W 649) परिपुच्छिआ ण जंपइ गहिआ विप्फुरइ चुंबिआ रुअइ ।
तुण्हिक्का णव-वहुआ किआवराहेण दइएण ॥ ८२ ॥

W 951) वाणिअअ हत्थि-दंता कत्तो अम्हाण वग्घ-किच्ची अ ।
जाव लुलिआलअ-मुही घरम्मि परिसक्कए सुण्हा ॥ ८३ ॥

W 470) अण्णाण वि होंति मुहे पम्हल-धवलाइ दीह-कसणाइ ।
णअणाइ सुंदरीणं[1] तह परिदट्ठुं ण-आणंति ॥ ८४ ॥

---

जातीनाम् । स्तनौ व्याधवध्वा अभयं दातुमिव निष्क्रान्तौ ॥' अत्र काचिद् विदग्धा कस्याश्चिद् व्याधवध्वा निरवद्यमुदितावतिमनोहरौ कुचकलशौ दृष्ट्वा सखीं प्रति, अस्या स्तनौ गजादीनामभयं दातुमिव निष्क्रान्तावित्यनेनास्या ईदृशौ स्तनौ दृष्ट्वा सर्वेऽपि पक्कणवासिनः शबरयुवानो विरहव्यथाकर्शिता मृगयां कर्तुमशक्ता-स्तदेकनिरतास्तिष्ठन्तीति ज्ञापितवतीत्यभिप्रायः । अत्र कविनिबद्धवक्तृप्रौढोक्ति-सिद्धार्थशक्तिमूलो ऽलंकारेण वस्तुध्वनिः, उत्प्रेक्षया व्याधयुवानस्तत्परतया मृगयायामशक्ता, इति वस्तुनः प्रतीतेः ॥ ८१ ॥ ८२) काचित् सखीमाह । **परि-पुच्छिआ**– ' परिपृष्टा न जल्पति गृहीता विस्फुरति चुम्बिता रोदिति । तूष्णीका नववधूः कृतापराधेन दयितेन ॥' **तुण्हिक्का** इत्यत्र दैवादिपाठाद् द्वित्वम् । अत्र या कृतापराधे प्रिये गृहमागते सति मानवशेन तूष्णीका दर्शनस्पर्शनसंभाषणादिरहिता तेन परिपृष्टा न जल्पतीत्यादिनान्तःमत्प्यमानाया बालिकाया रोषविशेषं पश्येति काचित् सखीमाहेत्यभिप्रायः । अत्र वाक्यप्रकाश्यो ऽसंलक्ष्यक्रमो भावध्वनिः, ईर्ष्यामानस्य प्रतीतेः ॥ ८२ ॥ ८३) काचिद् वणिजमाह । **वाणिअअ**–'वाणिजक हस्तिदन्ताः कुतो ऽस्माकं व्याघ्रकृत्तयश्च । यावल्लुलितालकमुखी गृहे परिवर्तते स्नुषा ॥' '**किचि**' इत्यत्र "च कृत्तिचत्वरे" इति [ प्रयुक्तस्य ] च । अत्र काचिद् व्याधवधू गजदन्तान् व्याघ्रकृत्तीश्च क्रेतुमागतं वणिजं प्रति, एषा स्नुषा लुलितालकमुखी यावद् गृहे वर्तते तावदस्माकं गजदन्ता व्याघ्रकृत्तयश्च कुतः इत्यनेनास्याः पतिरनुरागातिशयान्नवयौवनामेनां विहाय क्षणमपि अन्यत्र स्थातुमशक्तः सन् मृगयां न करोतीत्यभिप्रायः । अत्र स्वतःसिद्धार्थशक्तिमूलो ऽलंकारेण वस्तुध्वनिः, उत्तरालंकारेण तत्पतिस्तदासक्ततया मृगयां न करोतीत्यस्य वस्तुनः प्रतीतेः ॥ ८३ ॥ ८४) काचित् सहचरमाह । **अण्णाण वि-**
' अन्यासामपि भवति मुखे पक्ष्मलधवलानि दीर्घकृष्णानि । नयनानि सुन्दरीणां

---

1 MT सुदरीए।

W 877 ) महुएहि किं व पंथअ जइ हरसि णिअंसणं णिअंबाओ ।
साहेमि कस्स रण्णे दूरे गामो अहं एक्का ॥ ८५ ॥

W 957 ) णिअ-दइअ-दंसणूसुअ पंथअ अण्णेण वच्चसु पहेण ।
गहवइ-धूआ दुल्लंघ-वाउरा ठाइ हअ-गामे ॥ ८६ ॥

W 860) साहेंती सहि सुहअं खणे खणे दूमिआ सि मज्झ कए ।
सब्भाव-णेह-करणिज्ज-सरिसअं दाव विरइअं तुमए ॥ ८७ ॥

---

तथा परिद्रष्टु न जानन्ति ॥' अत्र कश्चित् प्रियया भावगम्भीरैरवलोकनैरपहृतमना सहचरस्य पुरस्तादनुरागातिशयात्तानि स्मार स्मार प्रशंसतीत्यभिप्राय । अत्र पदप्रकाश्यो ऽसंलक्ष्यक्रमो भावध्वनि , तथेति पदेन पूर्वानुभूतेन प्रियावलोकनेन निश्लेषस्मरणस्य प्रतीयमानत्वात् ॥ ८४ ॥ ८५) कस्याश्चिदसत्या वचनम् । **महुएहि**– ' मधूकै कि पान्थ यदि हरसि निवसन नितम्बात् । कथयामि कस्यारण्ये दूरे ग्रामो ऽहमेका ॥' **महुएहि** इत्यत्र " वा मधूके " इत्यूकारस्योकार । **णिअंसण**–शब्दो वस्तु [ वसन ] वाची देश्य । काचिदसती युवतिर्वनान्तरमुपागत्य मधूककुसुमानि सगृह्य प्रतिनिवर्तमाना मध्येमार्गं कस्मिंश्चिदभिरूपे यूनि पथिके तान्यादातु कर प्रसारयति सति त प्रति, हे पान्थ, मधूके कि वा । नितम्बादशुक यदि हरसि तदारण्ये कस्य कथयामि । ग्रामो दूरे, अहमेकेत्यनेन तद्दर्शनादुत्पन्नमन्मथव्यथापदेशादुपभोगाय वासो हरेति त प्रति बोधितवतीत्यभिप्राय । अत्र स्वत सिद्धार्थशक्तिमूलो विधिनिषेधरूपेण वस्तुना विधिरूपो वस्तुध्वनि , अनेन सभोगार्थं वस्त्रमपहरेति प्रतीते ॥ ८५ ॥ ८६) कस्याश्चिदसत्या वचनम् । **णिअदइअ**– ' निजदयितादर्शनोत्सुक पान्थ अन्येन व्रज पथा । गृहपतिदुहितातिदुर्लङ्घ्यवागुरा तिष्ठतीह हतग्रामे ॥' अत्र काचित्स्वैरती कमप्यभिरूप पथिकयुवान दृष्ट्वा त प्रति, हे पान्थ, निजदयितादर्शनोत्सुक, अन्येन पथा व्रज । अस्मिन् हतग्रामे दुर्लङ्घ्यवागुरा गृहपतिसुता तिष्ठतीत्यनेनात्र काचिद् रमणीयाकृतिर्युवतिरास्ते । सा त्वया द्रष्टव्येति त प्रोत्साहितवतीत्यभिप्राय । अत्र स्वत सिद्धार्थशक्तिमूलो विधिनिषेधरूपेण वस्तुना विधिरूपो वस्तुध्वनि । अनेनावश्यमेषा द्रष्टव्येति विधे प्रतीते ॥ ८६ ॥ ८७) नायिकोक्ति । **साहेंती**–'साधयन्ती सखि सुभग क्षणे क्षणे दूनासि मम कृते । सद्भावस्नेहकारिणी[1] यत्सदृश तावद् विरचित त्वया ॥' अत्र काचिन्नायिका

---

1 T कारिणी ।

W 958) आसाइअमण्णाएण जेत्तिअं ता तेत्तिं ण बंध धिइं ।
ओरमसु उसह एण्हिं रक्खिज्जइ-गहवइच्छेत्तं ॥ ८८ ॥

W 959) उच्चिणसु पडिअ-कुसुमं मा धुण सेहालिअं हलिअ-सुण्हे ।
एस अवमाण-विरसो ससुरेण सुओ[1] वलअ-सद्दो ॥ ८९ ॥

W 159) ईसालुओ पई से रत्तिं महुए ण देइ उच्चेउं ।
उच्चेइ अप्पण च्चिअ माए अइउज्जुअ-सहाओ ॥ ९० ॥

---

सम्भोगरसिकां सखीं प्रति, सद्भावेत्यादिविशेषणविशिष्टया मयि प्रियं रमयन्त्या त्वया शत्रुत्वमाचरितमित्यनेन लक्षितार्थेन तस्याः सापराधित्वं प्रकाशितमित्यभिप्रायः । अत्र लक्षणामूले वाच्यगतात्यन्ततिरस्कृतवाच्यध्वनिनाम्नो ध्वनिः, अनेन लक्षणाबलेन सख्याः सापराधत्वप्रकाशनप्रतीतेः ॥ ८७ ॥ ८८) कस्याश्चित् सख्या वचनम् । **आसाइअं**– 'आस्वादितमन्यायेन यावत्तावता बधान धृतिम् । उपरम वृषभेदानीं रक्ष्यते गृहपतिक्षेत्रम् ॥' अत्र क्षेत्रशब्देन पत्नी व्यज्यते । अत्र काचिद् विदग्धा सखी कमपि जारं कस्याश्चिदन्यस्या गृहं प्रविश्य परिपाल्य । तदनु तदीये कस्मिंश्चित् समागच्छति सति आस्वादितमित्यादिना वृषभनिवारणव्याजेन वाच्यार्थद्वयेन तदासक्त्या चिरयन्तमुपपतिमुपभोगान्निवारयतीत्यभिप्रायः । अत्र स्वतःसिद्धार्थशक्तिमूलो निषेधरूपेण वस्तुना निषेधरूपो वस्तुध्वनिः, वृषभनिवारणेन तन्निवारणस्य प्रतीतेः ॥ ८८ ॥ ८९) कस्याश्चिद् वचनम् । **उच्चिणसु**– 'उच्चिनु पतितकुसुमं मा धुनु शेफालिकां हालिकस्नुषे । एषोऽवसानविरसः श्वशुरेण श्रुतो वलयशब्दः ॥' अत्र काचिच्चतुरा सखी गृहपश्चाद्भागस्थितेषु शेफालिकानिकुञ्जेषु उपपतिना सह रममाणां सखीं पश्यन्ती रमणजनित तदीयवलयध्वनिविज्ञातवृत्तान्ता तां प्रति, उच्चिनु पतितकुसुममित्यादिना वाच्यव्यङ्ग्यकेन चौर्यरत प्रसङ्गे वलयशब्दो न कर्तव्य इति निवारितवतीत्यभिप्रायः । अत्र स्वतःसिद्धार्थशक्तिमूले विधिनिषेधरूपेण वस्तुना निषेधरूपो वस्तुध्वनिः, उच्चिनु, मा धुनीति विधिनिषेधाभ्यां वलयशब्दो न कर्तव्य इति निषेधस्य प्रतीतेः ॥ ८९ ॥ ९०) कस्याश्चिद् वचनम् । **ईसालुओ**– 'ईर्ष्यावान् पतिरस्या रात्रौ मधूकानि न ददात्यवचेतुम् । उपचिनोत्यात्मनैव मातः अतिऋजुस्वभावः ॥' अप्पण इति स्वयमर्थे निपातितः । "स्वयमप्पणा" इत्युक्तत्वात् । अत्र काचिद् विदग्धा विविक्तप्राप्तिवेशितवृत्तान्ता सखीं प्रति, अस्याः पतिरीर्ष्यावान् रात्रौ मधूकान्यवचेतुं न

---

1 M T सुदो ।

W 469) गामणि-घरम्मि अत्ता एक्क च्चिअ पाडला इहग्गामे ।
बहु-पाडलं व सीसं दिअरस्स ण सुंदर एअं ॥९१॥
W 550) बोल-सुणओ विरण्णो अत्ता मत्ता पई वि अण्णत्तो ।
फलिहं वि मोडिआ महिसएण को कस्स[1] काहेइ ॥ ९२ ॥
W 960) पविसंती घर-दारं विअलिअ-वअणा विलोइऊण पहं ।
खंधे मोत्तूण घडं हा हा णट्ठो त्ति रुअसि सहि किं ति ॥९३॥

ददाति । अतिऋजुस्वभाव स्वयमेवावचिनोतीत्यनेन स्वगृहिण्या वनव्यभिचार-शङ्कया ता परित्यज्य स्वय गच्छति । गृहे व्यभिचार न जानाति, पत्येति सोपहासमाहेत्यभिप्राय । अत्र स्वत सिद्धार्थशक्तिमूले वस्तुना ससृष्टो वस्तुध्वनि, ईर्ष्यावान् मधूकान्यवचेतु न ददातीति वाक्यप्रकाश्यस्यातिऋजुस्वभाव स्वयमवचिनोतीति वाक्यप्रकाश्येन सह ससर्गात् ॥ ९० ॥ ९१) श्वश्रू प्रति कस्याश्चिद् वचनम् । **गामणि**– 'ग्रामणीगृहे अत्ता एकव पाटला इह ग्रामे । बहुपाटलमिव शीर्ष देवरस्य न सुन्दरमेतत् ॥' अत्र ग्रामणीपदेन तस्य प्रतीकारसामर्थ्य गम्यते । बहुपाटलशीर्षमिवेत्यनेन देवरस्य तद्गृहिणीसबन्धो गम्यते । न सुन्दर, न शोभनम् । अनर्थपर्यवसायीत्यर्थ । अत्र काचिदसती देवरानुरक्ता इह ग्रामे ग्रामणीगृहे एकैव पाटलेत्यादिना वाक्यकदम्बकेन ग्रामणीगृहप्रवेशे महान्तमनर्थं प्रदर्श्य तेन स्वाभिलषितसिद्धये तस्मादेव निवारयेति श्वश्रूमाहेत्यभिप्राय । अत्र स्वत सिद्धार्थशक्तिमूले वस्तुना सकीर्णो वस्तुध्वनि, ग्रामण्यादिपदव्यङ्ग्य स्वार्थसिद्धये तन्निवारणरूपस्य व्यङ्ग्यस्यानुग्राहकत्वात् ॥ ९१ ॥ ९२) कस्याश्चिदसत्या वचनम् । **बोल**–'बोलो ( दुष्ट छिन्नकर्णो वा सचासा) शुनकश्च विपन्न श्वश्रू मत्ता पतिरप्यन्यत । कार्पासो ऽपि मा भूदितो महिषकेण कस्तस्य कथयति' । अत्र काचिदसती हालिकवधू, शुनको विपन्न, मत्ता माता, पतिरन्यत, तस्मात कार्पासो ऽपि महिषेण भग्न । कस्तस्य कथयतीत्यनेन प्रतिबन्धकाना दुष्टशुनकादीनामभाव सूचयन्ती वालदूतीवृत्त्या प्रवेशकालोऽय, त्वया समागन्तव्यमिति विधे प्रतीते ॥ ९२ ॥ ९३) कस्याश्चिद् विदग्धाया वचनम् । **पविसंती**–'प्रविशन्ती गृहद्वार विगलितवदना विलोक्य पन्थानम् । स्कन्धे मुक्त्वा घट हा हा नष्ट इति रोदिषि सखि किमिति ॥' अत्र काचिद् विदग्धा प्रातिवेशिनी काचित स्नुषा प्रति, हे सखि, गृहद्वार प्रविशन्ती विगलितवदना पन्थान विलोक्य स्कन्धे स्थित घट मुक्त्वा हा हा नष्ट इति किं रोदिषीत्यनेन

1 M T दस्स।

W 961) मा पंथ रुंधसु पहं अवेहि बालअ असेसिअ-हिरीअ ।
अम्हे अविरिक्काओ[1] सुण्णं घरअं व अक्कमामि ॥ ९४ ॥

W 32) अह संभाविअ-मग्गो सुहअ तुए च्चेअ णवर णिव्वूढो ।
एण्हिं हिअए अण्णं अण्णं वाआइ लोअस्स ॥ ९५ ॥

W 889) माए घरोवअरणं अज्ज खु णत्थि त्ति साहिअं तुमए ।
ता भण किं करणिज्जं एमेअ ण वासरो ठाइ ॥ ९६ ॥

नदीतीरलतागृहे कृतसंकेतवेलामतिवाह्येदानीं पथि गच्छन्तं जारं दृष्ट्वा जलहरणकर्मणि समाप्ते ऽपि पुनर्गमनसिद्धये स्वयमेव घटं पातयित्वा किमिति वृथा रोदिषि । शीघ्रमेव पुनरपरं घटं गृहीत्वा गच्छेत्यनुमतवतीत्यभिप्रायः । अत्र स्वतःसिद्धार्थशक्तिमूलो ऽलंकारेण वस्तुध्वनिः, घटपातनेन पुनः संकेतस्थानगमनेच्छाप्रतीतेः ॥ ९३ ॥ ९४) कस्याश्चिदसत्या वचनम् । **मा पंथ**— 'मा पान्थं रुन्धि पन्थानं अपेहि बालक अशेषितह्रीक । वयमरिक्ता (किं) शून्यं गृहमिवाक्रमामि ॥' इत्यनेन कामान्धतया पथिकजनसमक्षं गृहीतकामं जारं निवारयन्ती उपमानकथनव्याजेन संकेतस्थानं शून्यगृहमस्ति चेत्तत्र गच्छाव इति ■ प्रबोधितवतीत्यभिप्रायः । अत्र स्वतःसिद्धार्थशक्तिमूलो ऽलंकारेण वस्तुध्वनिः, उपमानेन शून्यगृहगमनप्रतीतेः ॥ ९४ ॥ ९५) नायिकावचनम् । अह— 'असौ सद्भावितमार्गः सुभग त्वयैव केवलं निर्व्यूढः । इदानीं हृदये ऽन्यदन्यद्वाचि लोकस्य ॥' अत्र काचित् प्रगल्भा नायिका गोत्रस्खलितं नायकं प्रति, लोकस्य मनस्यन्यद् वाच्यन्यत् । त्वं तु यन्मनसि वर्तते तदेव वाचि । तस्मात् त्वया सद्भावितमार्गः केवलं निर्व्यूढ इत्यनेन तं प्रशसन्तीव विपरीतलक्षणया न केवलं तद्गृहगमनमेव, तन्नामधेयग्रहणमपि मम पुरस्तात् करोषि । तस्मात् त्वादृशो दुरात्मा कश्चिन्नास्तीति तमुपालभत इत्यभिप्रायः । अत्र लक्षणामूलो वाक्यगतात्यन्ततिरस्कृतावि‌वक्षितवाच्यो ध्वनिः, अनेन दुरात्मेत्युपालम्भस्य प्रतीतेः ॥ ९५ ॥ ९६) कस्याश्चित् स्वैरिण्या वचनम् । **माए**— 'मातर्गृहोपकरणं अद्य खलु नास्तीति कथितं त्वया । तस्माद् भण किं करणीयं एवमेव न वासरस्तिष्ठति ॥' **'एमेअ'**— इत्यत्र "एवमेव देवकुलप्राकारकयावज्जीविताव‌टावर्तमाने तावति व "[इत्यादिना] अन्तर्वर्तिनो वकारस्य [अचा सहितस्य] लोपः । अत्र काचिदसती मातरमद्य गृहोपकरणं नास्तीत्येवमादिना वाक्येन स्वैरविहारार्थिनीव कंचनाभिसर्तुकामा गृहोपकरणव्याजेन मातरं पृच्छतीत्यभिप्रायः । अत्र

1 M T अहे म ण रक्काओ ।

W 4) उव णिच्चल-णिप्फंदा भिसिणीपत्तम्मि रेहइ बलाआ।
णिम्मल-मरगअ-भाअण-परिट्ठिआ संख-सिप्पि व्व ॥ ९७ ॥

W 875) णोल्लेइ अणोल्ल-मणा अत्ता मं घर-भरम्मि सअलम्मि।
खण-मेत्तं जइ संझाएँ होइ ण व होइ वीसामो ॥ ९८ ॥

W 962) सुव्वइ समागमिस्सइ तुज्झ पिओ अज्ज पहर-मेत्तेण।
एमेअ कि ति चिट्ठसि ता सहि सज्जेसु करणिज्जं ॥ ९९ ॥

W 705) गामेलुअ म्हि गामे वसामि[1] णअरट्ठिइं ण-आणामि।
णाअरिआणं पइणो हरेमि जा होमि सा होमि ॥१००॥

---

स्वत सिद्धार्थशक्तिमूलो वस्तुना वस्तुध्वनिः,स्वैरविहारस्य गम्यमानत्वात् ॥९६॥ ९७) कस्याश्चिदसत्या वचनम्। उव–'पश्य निश्चलनिष्पन्दा विसिनीपत्रे राजते बलाका। निर्मलमरकतभाजनप्रतिष्टिता शङ्खशुक्तिरिव ॥' राजते पश्येति कथनव्याजेन बलाका निष्पन्दतया जनरहितो ऽय देशस्तेनाय सकेतस्थान भवितुमर्हति इति तटस्थ जार श्रावयतीत्यभिप्राय । अत्रोपमालकार । स्वत सिद्धार्थशक्तिमूलो वस्तुना वस्तुध्वनि, बलाकानिष्पन्दताव्यङ्ग्येन जनराहित्येन सकेतस्थानस्य गम्यमानत्वात् ॥ ९७ ॥ ९८) कस्याश्चिदसच्चरिताया वचनम्। णोल्लेइ–'प्रेरयत्यनार्द्रमना अत्ता मा गृहभरे सकले। क्षणमात्र यथा सन्ध्याया भवति न वा भवति विश्राम ॥' अत्र कस्याश्चित् स्नुषा प्रातिवेशिनीम् अनार्द्रमना श्वश्रूरित्यादिना वाक्यकथनव्याजेन मम दिवा रात्रौ च नावसर । क्षणमात्र सन्ध्याया विश्रमो ऽस्ति। तदानीं त्वया समागन्तव्यमित्यवसरापेक्षिण तटस्थ जार श्रावयतीत्यभिप्राय । अत्र स्वत सिद्धार्थ-शक्तिमूलो ऽलकारेण वस्तुना वस्तुध्वनि, अनेन सन्ध्यासमये त्वया समागन्तव्यमिति वस्तुन प्रतीते ॥ ९८ ॥ ९९) कस्याश्चित् सख्या वचनम्। सुव्वइ–'श्रूयते समागमिष्यति तव प्रियो ऽद्य प्रहरमात्रेण। एवमेव निमिति तिष्ठसि तस्मात् सखि सज्जय करणीयम् ॥' अत्र काचित् सखी प्रातिवेशिकीं स्वैरिणीं कस्याश्चित् स्नुषा प्रति, श्वश्र्वा संनिधौ हे सखि, प्रियो ऽद्य प्रहरमात्रेण समागमिष्यतीति श्रूयते। तस्मात् करणीय सज्जय। एवमेव विमिति तिष्ठसीत्यनेन प्रियागमनस्य याममात्र विलम्बो ऽस्ति। एतावति काले शाकाद्यानयनव्याजेन निर्गत्य सकेता-गतमुपपतिमुपभोगेन कृतार्थयेत्यावेदयतीत्यभिप्राय । अत्र स्वत सिद्धार्थशक्तिमूलो वस्तुना वस्तुध्वनि, अनेनास्मिन्नन्तरे व्याजान्निर्गत्य तदुपभोग क्रियतामिति वस्तुन प्रतीते ॥ ९९ ॥ १००) कस्याश्चिद् वचनम्। गामेलुअ म्हि–'ग्रामाणाह ग्रामे

---

1 MT गामेरवसामि।

W 963) खण-पाहुणिआ देअर-जाआ ए सुहअ किं ति दे भणिआ ।
रुअइ घरोपंत-फलिणि-घरम्मि अणुणिज्जउ वराई ॥१०१॥
W 940) ताण गुणग्गहणाणं ताणुक्कंठाण तस्स पेम्मस्स ।
ताण भणिआण सुंदर असरिसओ होइ ओसाओ ॥१०२॥
W 103) बहु-पुप्फ-भरावणमिअ भूमि गअ-साह सुणसु विण्णत्ति[1] ।
गोला-तड-विअड कुडंग महुअ सणिअं गलिज्जासु ॥१०३॥

---

वसामि नगरस्थितिं न जानामि । नागरिकाणां पतीन् हरामि या भवामि सा भवामि ॥ ' अम्हि- इत्यत्र " तद्व्यत्ययश्च " इति उद्द्रस्थाने ल्ट् । अत्र काचित् ग्रामीणा नायिका सखीं प्रति, ग्रामे जाता ग्रामे वसामि नगरस्थितिं न जानामि । या भवामि सा भवामि, तथापि नागरिकाणां पतीन् हरामीत्यनेन तया सह सलापकथाजात स्वस्य रूपयौवनकलाकौशल्यानि नवागत ममपि नागरिक गतदूतीकृत्या श्रावयतीत्यभिप्राय । अत्र स्वत सिद्धार्थशक्तिमूलो उक्कारेण वस्तुध्वनि, विभावनया वस्तुन प्रतीतेः । " प्रसिद्धहेतुव्यावृत्त्या यत्किंचित् कारणान्तरम् । नैसर्गिक वा यत्र स्यात् विभाव्या सा विभावना ॥ " इति ॥१००॥

१०१) कस्याश्चित प्रजावत्या वचनम् । खणपाहुणिआ—' क्षणप्राघुणिका देवर जाया सुभग किमपि भणिता । रोदिति गृहपश्चाद्भागफलिनीलताकुञ्जे वराकी ' अत्र काचित् प्रजावती देवरं प्रति, हे सुभग, तव जाया क्षणप्राघुणिका सा किमपि भणिता गृहपश्चाद्भागफलिनी लताकुञ्जे रोदिति वराकी । अनुनीयताभित्यनेनैव त्वय्यनुरक्ता सती ग्रामान्तरादुत्सवव्याजेनागता भवन्तमदृष्ट्वा लतागृहे भृशमुत्कण्ठिता तिष्ठति । तामुपभोगेन सभाजयेत्यभिप्राय । अत्र स्वत सिद्धार्थशक्तिमूलो वस्तुना वस्तुध्वनि, अनेन तदुपभोग क्रियतामिति वस्तुन प्रतीते ॥१०१॥

१०२) कस्याश्चिद् वचनम् । ताण—' तेषा गुणग्रहणाना तासामुत्कण्ठाना तस्य प्रेम्ण । तेषा भणितानां सुन्दर असदृशको भवत्यवसाद ॥ ' अत्र तत्पदैस्तत्तदतिशयो गम्यते । अत्र काचिदुपारूढयौवनमदा कामिनी बहुविधसुरततन्त्रसमर्थोऽहमिति विकत्थमान अन्तरा श्रान्त कान्त प्रति, हे सुन्दर, तेषा गुणग्रहणादीनामसदृशो ऽवसादो भवतीत्यनेन तमपहसन्ती स्वय पुरुषायितायोग्यमहत इत्यभिप्राय । अत्र स्वत सिद्धार्थशक्तिमूलो वस्तुना वस्तुध्वनि, अनेन पुरुषायितकरणेच्छाप्रतीते ॥१०२॥ १०३) कस्याश्चित् स्वैरिण्या वचनम् । बहुपुप्फ-' बहुपुष्पभारावनमित भूमिगतशाख शृणु विज्ञाप्तिम् । गोदातटविकटकुडङ्ग मधूक

---

1 M ] विण्णप्पं ।

W 965) घरिणि-पवेसिअ-जारे घरे घरत्थेण छिंछई ठविआ ।
मिलिआ छिंछइ-जारा पच्छा घरिणी-घरत्थो अ ॥१०४॥

---

शनैर्गलिष्यसि ॥ ' अत्र काचिदसती बहुपुष्पभरावनमितभूमिगतशाखे गोदातट-निकटकुडुङ्गमधूके कृतसंकेता तत्रोपपतिना रममाणा कदाचिदस्य विरळपुष्पता दृष्ट्वा हे मधूक, शनैर्गलिष्यसि, इत्यनेनेत-परमपि कानिचिद्दिनानि तेन समं रिरंसुः कुसुमापनयनव्यपदेशेन स्वनिर्गमनसिद्धये तं प्रार्थयत इत्यभिप्रायः । अत्र स्वतः-सिद्धार्थशक्तिमूलो वस्तुना वस्तुध्वनिः, अनेन रिरंसोस्तस्या निर्गमनेच्छा-प्रतीतेः ॥ १०३ ॥ १०४) कवेर्वाक्यम् । **घरिणि**— ' *गृहिणीप्रवेशितजारे गृहे* गृहस्थेन असती स्थापिता । मिलितावसतीजारौ पश्चाद् गृहिणी गृहस्थश्च ॥ ' अत्र वाक्यार्थः स्पष्टः । अभिप्रायो व्यक्त एव ॥ १०४ ॥

इति वेदकोमटिवेमभूपालेन कृता

सप्तशतीसारटीका भावदीपिका संपूर्णा ॥



# INDEX OF GĀTHĀS


| | गाथाक्रमाङ्कः |
|---|---|
| अइपिहुलं जलकुम्भं | ६६ |
| अच्छउ ताव मणहर | २७ |
| अज्ज च्चेअ पउत्थो | २१ |
| अज्ज मए गतव्व | ३५ |
| अणुदिअहकआभोआ | ४१ |
| अण्णमहिलापसग | १८ |
| अण्णाण वि होंति | ८४ |
| अत्ता एत्थ णुमज्जइ | १५ |
| अद्धच्छिपेच्छिअं मा | ७० |
| अलिअ पाअडकव्व | २ |
| अवरज्झसु वीसद्ध | ५० |
| अवलम्बिअमाण– | ३० |
| अव्वो ण आमि | १४ |
| असमत्तमडण च्चिअ | २३ |
| अह अम्ह आगओ | ४९ |
| अहअं लज्जालुइणी | १६ |
| अह सम्भाविअमग्गो | ९५ |
| आणासआइ देंती | १० |
| आरभतस्स धुर | २६ |
| आसाइअमण्णाएण | ८८ |
| ईसालुओ पई से | ९० |
| उच्चिणसु पडिअ-कुसुम | ८९ |
| उज्जागरअकसाइअ | ७२ |
| उज्जुअरए ण तूसइ | ६९ |
| उण्ह णिणीससतो | ३६ |

| | गाथाक्रमाङ्कः |
|---|---|
| उद्धच्छो पिअइ जलं | १३ |
| उअ णिच्चलणिप्फन्दा | ९७ |
| एद्दहमेत्तगामे | ५४ |
| ओसरइ धुणइ | ६३ |
| कइअवरहिअं पेम्मं | ५९ |
| कत्तो गेम कत्तो | ६४ |
| कस्स व ण होइ | ७ |
| कह सा सोभग्गगुण | ७१ |
| केमा पडुरछाआ | ६७ |
| खणपाहुणिआ देअरजाआ | १०१ |
| खाणेण अ पाणेण | ३७ |
| गअगडगरअसेरिह– | ८१ |
| गामणिघरम्मि अत्ता | ९१ |
| गामेल्लुअ म्हि गामे | १०० |
| गाहाण अ गेहाण | ३ |
| गोलानिम्मोआर | ७३ |
| घरिणि-पवेसिअजारे | १०४ |
| जइ वि हु दक्खि– | ७४ |
| जं असरणो व्व | १७ |
| जं जं सो णिज्झाअइ | २५ |
| जं तुह कज्जं तं | ८ |
| जाइ वअगाइ अम्हे | ३२ |
| ठाणे ठाणे वलिआ | २९ |
| णिअदइअदंसणुस्सुअ | ८६ |
| णिणिंदं दोव्वल | ६८ |

| | गाथाक्रमाङ्कः | | गाथाक्रमाङ्कः |
|---|---|---|---|
| णिद्द ल्हति भणिअ | २४ | भम धम्मिअ वीसद्ध | ५८ |
| णूमंति जे पहुत्त | ३४ | भजतस्स वि तुह | ४२ |
| णोल्लेइ अणोल्लमणा | ९८ | भडतीएँ तिणाइ | ६५ |
| तइआ मह गडत्थल– | ३९ | भिउडीए पुलोइस्स | ६२ |
| तथ वि होंति सहीओ | ७८ | महिलासहस्सभरिए | ३८ |
| तस्स अ सोहग्गगुण | ५७ | महुएहि किं व | ८५ |
| तह सुण्हाएँ पुलइओ | ४८ | माए घरोवअरण | ९६ |
| ताण गुणग्गहणाण | १०२ | मा पथ रुंधसु पह | ९४ |
| तुह दसणसत्तिण्हा | ३१ | मा वच्चसु वीसभ | ६१ |
| थोअ पि ण णीइ | २२ | मुहविज्झविअपईव | ७५ |
| दक्खिण्णएण एतो | ५३ | रणरणअसुण्णहिअओ | ५१ |
| दुक्ख देंतो वि | ४६ | रूअ अच्छीसु | ७९ |
| धणिअ उवगूहिअ | ४० | वण्णतीहि तुह गुणे | ३३ |
| पइपुरओ च्चिअ | ५९ | वकभणिआइ कत्तो | ७७ |
| पच्चक्खमतुकारअ | ५६ | वक को पुलइज्जइ | ४३ |
| पच्चूसागअ णव– | ११ | वडजक्खो जो अ | ४५ |
| पणमह माणस्स | ४ | वाणिअअ हत्थिदता | ८३ |
| परिपुच्छिआ ण जपइ | ८२ | वाणीरकुडगुड्डीण– | १९ |
| पसिसती घरदार | ९३ | वाहित्ता पडिवअण | १२ |
| पसुवइणो रोसारुण– | १ | सच्च कलहे कलहे | ५ |
| पथअ ण एत्थ | ७६ | सच्च जाणइ दट्ठु | ६ |
| पुरिअ रामच्छि तुए | ० | साहेंती सहि सुहअ | ८७ |
| बहलतमा हअराई | ४४ | सिहिपेहुणावअसा | ५५ |
| बहुपुप्फभराणमिअ– | १०३ | सिहिपिच्छलुलिअकेसे | २० |
| बहुसो वि कहिज्जत | ४७ | सुव्वइ समागमिस्सइ | ०० |
| बोल-सुणओ विरण्णो | ०२ | सूरच्छलेण पुत्तिए | २८ |
| भण को ण रूसइ | ८० | सेउल्लिअसव्वंगी | ६० |


---

# भावदीपिकोक्त–

## त्रिविक्रमसूत्रानुक्रमणिका


अपुण्णगा क्तेन 39 [ III. 1 132 ]

अहद्रा मुना 10 [ II. 2 91 ]

एण्हि एत्ताहे इदानीम 7 [ I 3 103 ]

एत्मेरदेरकुलप्राकारकयारर्जाविताग्दारर्तमानतारति च 96 [ I 3 94 ]

ओ पश्चात्तापसूचने 8 [ II 1 60 ]

क शक्तमुक्तदष्टमृदुत्वरुग्णेषु 63 [ I 4 4 ]

गभीरग इत् 1 [ I. 2 51 ]

गमिष्यत्प्रज्ञातवत्सा° 22 [ III 1 97 ]

घूर्णेर्घुम्मपहल्लघोल्घुला 4 [ II 4 142 ]

चर्नृतिमदिव्रजाम् 61 [ II 4 49 ]

च कृत्तिचत्वरे 83 [ I 4 16 ]

छर्गमिष्यमासाम 27 [ II 4 50 ]

छादेर्णूमनुमोव्वालडक्कपव्वाल्सतुमा 34 [ II 4 110 ]

छायाया होऽकान्तौ 22 [ I. 3 70 ]

तद्व्यत्ययश्च 100 [ III 4. 70 ]

तु समृद्ध्यादा 5 [ I 2 10 ]

दृप्ते ऽरिप्ता 58 [ I 2 88 ]

दं समुखीकरणे 18 [ II 1 59 ]

द्वन्द्वेषु 12, 82 [ I 4 92 ]

न रा तीर्थदु खदक्षिणदीर्घे 9 [ I. 4 63 ]

ने सदेर्मज्ज 15 [ II 4 145 ]

पथे मि 7 [ I. 2 31 ]

प्रतिगे ऽप्रतीपगे 2, 19 [ I. 3. 33 ]

लुगव्ययत्यदाद्यात्तदचः 79 [ I. 2. 3 ]

लो वा विद्युत्पत्रपीतान्धात् 15 [ II. 1. 26 ]

वरइत्तगारतृनाद्यैः 2, 16, 23, 37, 56 [ II. 1. 30 ]

वा मधूके 85 [ I. 2. 70 ]

वा से 71 [ I. 4 90 ]

शय्यादौ 15 [ I. 2. 26 ]

संदिशो ऽप्पाहः 60 [ III. 1. 112 ]

स्वयमो ऽर्थे अप्पणा 90 [ II. 1. 70 ]

हे दक्षिणे ऽस्य 9 [ I. 2. 9. ]

## भावदीपिकायाम्

## अन्यग्रन्थेभ्य उध्दृतश्लोकानुक्रमणिका


| | | |
|---|---|---|
| अगूढमपरस्याङ्ग | १२ | ( काव्यप्रकाश, ५.४५-४६ ) |
| अतर्किते तु सहसा | ४९ | ( अमरकोश, अव्ययवर्ग, २८६३ ) |
| अन्यथावस्थिता | १ | ( काव्यादर्श, २.२२१ ) |
| अयुज्यमानस्य मिथ | २५ | ( सरस्वतीकण्ठाभरण, ३.४४ ) |
| अर्थान्तरप्रवृत्तेन | ४६ | ( काव्यादर्श, २.३४८ ) |
| इदमुत्तममतिशयिनि | ४ | ( cf काव्यप्रकाश, १.४ ) |
| उद्योगानुसारिणी | २६ | ( cf यत्नानुसारिणी लक्ष्मी कीर्तिस्त्यागानुसारिणी । ) |
| कारणे सति कार्यानुत्पत्ति | ३८ | |
| गुणीभूतो रसादिर्यत्र | २० | ( cf. ध्वन्यालोक, २.५ ) |
| प्रतिषेधोक्तिराक्षेप | ५ | ( काव्यादर्श, २.१२० ) |
| प्रसिद्धहेतुव्यावृत्या | १०० | ( cf काव्यादर्श, २.१९९, सरस्वतीकण्ठाभरण, ३.९ ) |
| बुध्देतस्य समीहित | ६ | ( cf जयमङ्गला-वात्स्यायनकामसूत्र, ५४ ) |
| यान्यसभाषणव्याजात् | २१ | |
| निरक्षा या विशेषस्य | ३ | (काव्यादर्श,२.२१४;सरस्वतीकण्ठाभरण,४.८१) |
| विवक्षितगुणोत्कर्षे | ३ | ( काव्यादर्श, २.३३० ) |

## अन्यग्रन्थेषु उद्धृताः सप्तशतीसारस्थ-गाथाः

| S. No. | Quotation | Name of the work | (पृष्ठाङ्क) | Observation |
|---|---|---|---|---|
| 15 | अत्ता एत्थ | काव्यानुशासनम् | (५३) | निषेधे विधिरूपो ध्वनिः। |
| 16 | अहअं | ,, | (१५५) | अस्फुटं व्यङ्ग्यम्। |
| 88 | आसाइअं | ,, | (५४) | निषेधे निषेधान्तररूपो ध्वनिः। |
| 89 | उच्चिणसु | ,, | (५५) | विधिनिषेधयोर्निषेधान्तररूपो ध्वनि.। |
| 7 | कस्स व | ,, | (५७) | वाच्याद् विभिन्नविषयत्वेन व्यवस्थापितो ध्वनिः। |
| 98 | णोल्लेइ | ,, | (६०) | अन्यासक्तिवैशिष्ट्यात् अर्थस्य व्यञ्जकत्वम्। |
| 86 | णिअदइआ | ,, | (५५) | विधिनिषेधयोर्विध्यन्तररूपो ध्वनिः। |
| 76 | पंथअ ण | ,, | (६७) | वाक्ये ध्वनिः। |
| 44 | बहुलतमा | ,, | (५३) | विधौ विध्यन्तररूपो ध्वनिः। |
| 58 | भम धम्मिअ | ,, | (४७) | विधौ प्रतिषेधरूपो ध्वनिः। |
| 38 | महिलासहस्स | ,, | (१५५) | संदिग्धप्राधान्ये ध्वनिः। |
| 85 | मह्रुएहि | ,, | (५४) | अविधिनिषेधे विधिरूपो ध्वनिः। |
| 94 | मा पंथ | ,, | (८४) | त्याद्यन्ते ध्वनिः। |
| 83 | वाणियय | ,, | (६३)<br>(३९६) | व्यङ्ग्याद् ध्वनिः।<br>परिसंख्यालङ्कारः। |
| 19 | वाणीर | ,, | (१५२) | व्यङ्ग्यात् वाच्यमेव सातिशयम् |
| 87 | साहेंती | ,, | (६२) | असुख्यस्य व्यञ्जकत्वम् |
| 20 | सिहि पिच्छ | ,, | (४२५)<br>(७२) | विच्छित्तिः। |
| 99 | सुव्वइ | ,, | (६१) | प्रस्तावाद् व्यञ्जकत्वम् |

## CHAPPANNAYA-GĀHĀO OR THE GĀTHĀKOŚA

The *Kuvalayamālā* of Uddyotanasūri ( A. D. 779 ), which is critically edited by me and lately published in the Singhi Jaina Series (Bhāratīya Vidyā Bhavana, Bombay 1959 ), contains three references ( page 3, lines 18 and 25; page 177, line 2 ) to Chappannaya :

पालित्तय-सालाहण-छप्पण्णय-सीह णाय सद्देहिं ।
संखुद्ध-मुद्ध-सारंगओ व्व कह ता पयं देमि ॥

" How can I take any steps ( or present any words by way of composition ), being, like a simple deer, terrified by the roar of lions, namely Pālittaya, Sālāhana and Chappannaya ? "

छप्पण्णयाण किं वा भण्णउ कइ-कुंजराण भुवणम्मि ।
अण्णो वि छेय भणिओ अज्ज वि उवमिज्जए जेहिं ॥

" What need be said about Chappannayas, the prominent poets, with whom, even to this day, any other poet of clever sayings is compared in this world ? "

एवं इमाइँ एत्थं अण्णाइ मि होंति बहु वियप्पाइं ।
छप्पण्णय बुद्धि-वियप्पियाइँ मइ-वित्थर-कयाइं ॥

" Thus there are these and various other alternatives (of verbal tricks) fashioned or conceived by the intelligence of the Chappannayas and composed by their extensive wisdom "

Studying these three verses together, it is clear that Chappannaya is not any individual author like Pālittaya and Sālāhana Chappannayas represented a community of outstanding poets whose clever utterances were looked upon as a standard. They were of alert intelligence and extensive wisdom, and further quite proficient in a variety of verbal tricks [1] The way in which these tricks are introduced indicates that these Chappannayas were also known by the name Vidagdha.[2]

Mm V V MIRASHI[3] was attracted by the first two gāthās of Uddyotana quoted by C D DALAL, years back, in his edition of Rājaśekhara's *Kāvyamīmāṃsā*. While interpreting the first verse he adduced the following reference from the *Avantisundarīkathā*

सेतुरूपेण तिष्ठन्तो लोके सद्वस्तुदर्शिनः ।
यत्प्रासादमपाणर्व गता न. कविपुङ्गवाः ॥

1 Some of them are illustrated in the *Kuvalayamālā* para 280, pp 174 ff.

2 तए अण्णेण केण वि वियड्ढ-बुद्धि-परिकप्पिएण विणोएण अच्छामो त्ति । कुमारेण भणियं 'किं दुक्कर मलत्त, तत्थ वियड्ढ प`रिकप्पियाइं इमाइं विणोय-कारणाई । तं जहा । पहेलिया etc.

3 Some Ancient Prākrit Poets, *Bhāratīya Vidyā*, Vol X, pp 42-8, Bombay 1949

This led him to interpret that Chappannaya indicated a group of *fifty-six* eminent poets who had an insight into the real nature of things and attained the position of authority in their own sphere. Further, they have survived in this world in the form of Setu. He raises some probable questions whether the word Setu stands for the famous Prakrit Kavya, *Setu-bandha* or *Rāvaṇavaho*, whether it was actually composed by fifty-six poets who fathered it upon the king Pravarasena ( of the Vākāṭaka dynasty ) who was ruling over Vidarbha in the 5th century A. D. He, However, rules out these possibilities, taking into consideration the uniform character of the *Setubandha*, like that of *Kumarasambhava* etc., but proposes that Setu must have been another work of the type of an anthology, containing *subhāṣitas*, in which the poets by means of a few strokes depicted an interesting situation. In his opinion, there might have been such an anthology compiled in the Vakataka age, possibly under the name of Setu, and some of its verses got incorporated into the earlier anthology of Hāla.

Whether the word Chappannaya used by Uddyotana really indicated fifty-six is a moot point. In fact, taking together all the three references of Uddyotana, it is more consistent that he has in view a group of poets known by the title Chappannaya i. e., Ṣaṭprajña. It is not unlikely that the author of the *Avantisundarīkatha* misunderstood or differently understood the word Chappannaya and took it to mean 'fifty six' just as Ratnaprabhasuri, in his Sanskrit *Kuvalayamala-katha*[1] renders Chappannaya into Sanskrit as Ṣaṭkarna ( p. *2, line 15 ) or Satparna ( see the corrupt various reading below, No. 15) and the report on the Cambay Ms., noted below, gives the name Ṣatparnaka. The word *setu* might mean 'a landmark', and these authors have survived as a 'landmark' in the sphere of poetry. Dr. V. RAGHAVAN has written an interesting note on the Ṣatprajña and has shown how, in course of time, its meaning gradually changed. His observations are reproduced below, and in the light of these Uddyotana's verses became all the more clear.

Dr. RAGHAVAN's note stands thus: "Somadeva[2] continues his description of rogues. He speaks of fourteen families of rogues of which the sixth family, he says, arose from the dust of the feet of Ṣatprajñas.

This is an interesting reference to a community of men of society whom both *Ānandavardhana* and Abhinavagupta refer to in their *Dhvanyaloka* and *Locana* ( Uddyota IV, pp. 222-3, N. S. Press edition of 1928 )

1 This is lately edited by me critically as a supplement to the ed. of the *Kuvalayamalā* ( Singhi Jaina Series 45A ) Bombay 1961.

2 *Gleanings from Somadevasūri's* Yaśastilakacampu. *Ganganatha Jha Research Institute Journal*, Vol. I part 3 pp. 370-72. Allahabad 1944.

Ānandavardhana mentions these Satprajñas in connection with cases of expressions where the charming *vācya* is primary '*mukhya*' and the *vyanga* is subordinated '*gunībhūta*', and gives as illustrations the beautiful Prākrit verses on love composed by the Satprajñas, Satprajñādi gāthās Commenting on this in his *Locana*, Abhinavagupta says that these gāthās are called in this circles of Prākrit poets '*aaha*', and Satprajñas are those Sahrdayas who, living next door to each other and being well versed in the world, meet together and exchange expressions of wit, lyrical stanzas etc And Abhinavagupta cites as an example a gāthā of his own Guru, Bhattenduraja

*Dhvanyaloka* ( p 222 )

यत्र तु चाटुषु देवतास्तुतिषु वा रसादीनामङ्गतया व्यवस्थानं, हृदयवतीषु च षट्प्रज्ञादिगाथासु कासुचिद् व्यङ्ग्यविशिष्टवाच्यप्राधान्यम्।

*Locana* ( pp 222-23 )

हृदयवतीष्विति। 'अअरिया' इति प्राकृतकविगोष्ठ्यां प्रसिद्धासु त्रिवर्गोपायोपेयकुशला सहृदया षट्प्रज्ञा प्रातिवेश्मका उच्यन्ते। तद्गाथा यथा भट्टेन्दुराजस्य—

ए धिअगअणा फल्हीलआओ होंतु त्ति वड्ढन्तीए।

हलिअसुण्हासिम पारिवेस ॥

अथ एहितगगना कार्पासलता भवन्त्विति हालिकस्यापि वर्धयन्त्या प्रातिवेश्मिक परनिर्वृति प्रापित इति चौर्यसंभोगाभिलाषणीयमित्यनेन व्यङ्ग्येन विशिष्टवाच्यमेव सुन्दरम्।

In a gāthā in the *Vajjalaggam* ( Bib Ind edn , pp 58-59, No 281 ) Vidagdha paddhati, Satprajña is used in the sense of a Vidagdha and an adept in the art of love making

[ जइ कहवि ताण छप्पण्णयाण सुणुपवि गोयरे पडसि।
ता घोरसमहदाहेक्कमंडिया दुक्कर जियसि ॥ ]
यदि कथमपि तेषां षट्प्रज्ञानां तन्वङ्गि गोचरे पतसि।
मदोत्कृष्टरूपमदाहैकमण्डिता दुष्कर जीवसि ॥

In explanation of the name Satprajña given to these gifted men, Abhinava seems to say that they are so called because of their knowledge (*prajña*) of six ( *sat* ) things the *upayas* ( means ) and *upeyas* ( ends ) pertaining to *trivarga* ( *dharma artha* and *kama*—3×2=6 ) Monier Williams says on the basis of some authority that six things are the four *purusarthas lokartha* and *tattvartha*, and it is probably the same authority as quoted in the *Sabdakalpadruma*

धर्मार्थकाममोक्षेषु लोकतत्त्वार्थयोरपि।
षट्सु प्रज्ञास्ति यस्योच्चैः स षट्प्रज्ञ इति स्मृत ॥

In Abhinava's explanation, there is the omission of Moksa, and in Ānandavardhana too, the implication is that the Satprajña is a man of taste and a worldly wise person Originally a wise man, then one with much worldly wisdom and taste then one with a gift for fine expression and enjoyment of

